# भारती

संस्कृत-मासपत्रिकायाः



यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

श्री बद्रीनाथः

श्री द्वारका

जगन्नाथः

भाद्रपदः
वर्षम् २६
अङ्कः ११

सितम्बरः
१९७६

वार्षिकमूल्यम् दश मुद्राः १०.००
एकप्रतेः–एकं रूप्यकम् १.००

राजस्थान–मध्यप्रदेश—गुजरात—महाराष्ट्र—मद्रास—आंध्र—उत्तरप्रदेश—
बिहार—पञ्चनद—सर्वकारैः स्वीकृता

# विषय-सूची





सम्पादकः
दीनानाथत्रिवेदी मधुपः
साहित्यालङ्कारः
सहसम्पादकः
रामगोपालशास्त्री
जयपुरम्

# भारती

लेखैरुपष्टुता याऽऽस्ते भारतीव सितच्छदा
भारती भारतीयानां भासतां भवनेष्वलम्

संरक्षकः
श्री देवीशङ्कर तिवाड़ी
व्यवस्थापकः
राधेश्यामशर्मा
श्री शङ्कर आर्ट प्रिण्टर्स
त्रिपोलिया बाजार,
जयपुरम्-२

वर्षम् २६ | भाद्रपदः, विक्रमाब्दः २०३३ [सतम्बरः, १९७६] | अङ्कः ११

## मङ्गलम्

दीनानाथत्रिवेदी मधुपः, सम्पादकः

वाणिज्ये फलमाप्नुवन्तु वणिजो गोविप्रपूजापराः,
मोदन्तां निजधर्मकर्मनिरताः सर्वेऽपि विप्रादयः ।
प्राज्ञाः संस्कृतसेविनश्च कृपया गोविन्ददेवप्रभोः-
सर्वे भारतशासकाश्च सुखिनः सन्तु प्रजासौख्यदाः ।।



## मासावतरणम्

दीनानाथत्रिवेदी मधुपः, सम्पादकः

मासस्य यस्योषसि शुक्लषष्ठ्यां (१),
स्नात्वा समभ्यर्च्य च सूर्यदेवम् ।
सम्प्राश्य लोकाः किल पञ्चगव्यम्,
पुण्यं महद्यान्त्यपि सैष भाद्रः ।।



(१) तथा चोक्तम्—
शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् ।
प्राशनं पञ्चगव्यस्य अश्वमेधफलाधिकम् ।।

# वरदक्षिणा

(गृहकोष्ठे उपविश्य बाबूरायः लिखति)

वसन्तवाणी (सहसा प्रविश्य) सदा लेखनम्। सर्वदा लेखनम्।

किं पुनः प्रारब्धम्? गृहस्थितिः का? इत्येतदपि न विचार्यते।

बाबूरायः—भद्रे! शृणु। काशीहिन्दू-विश्वविद्यालयस्य नाटकस्पर्धाकृते नाटकं लेखितुकामोस्मि। तत्पञ्चदिनादर्वाक्प्रेषणीयम्। किं पुनर्मध्ये त्वम्?

वसन्तवाणी—कथं पुनर्मध्ये न भवामि। युवतिर्द्वाविंशवर्षदेशीया पुत्री तिष्ठति विवाहयोग्या। तस्याः कृते न कोपि प्रस्तावः श्रीमताम्। तां कदा भर्तृहस्तगतां करिष्यावः। कस्मै देया? कदा कार्यम्? कान्यावश्यकानि? कुत्र गन्तव्यम्? को वा विचारः? न कापि-चिन्ता दरीदृश्यते।

बाबूरायः—किं वा करोमि। मम मासिकाल्पवेतनेनैव सा बी. ए, पर्यन्तं शिक्षिता। तदर्थं दशसहस्रव्ययो जातः। पुनर्विवाहः। संप्रति न काकिणिकाप्यवशिष्टा। यदि विवाहप्रस्तावः प्रस्तूयते तर्हि पञ्चदशसहस्र-रूप्यकाण्यावश्यकानि।

वसन्तवाणी—तर्हि तूष्णीं भवनं वा? तूष्णीं भवनेनाधुना जनसविधे हास्यास्पदौ भविष्यावः। प्रथमं तावन्मम भ्राता शिवानन्दो विचार्यः। पश्चादन्येषां प्रस्तावः।

बाबू०—पूर्वमेव तव पिता विचारितः। काले वदिष्यामः-इत्युक्तं तेन।

वसन्तवाणी—भवतु। पुनर्विचार्यताम्। कन्यापितृभिरेव पूर्वं विचारणीयं खलु। नो चेदन्यत्र निश्चितं भवति। भवन्नाटकं सर्वं तिष्ठतु तावत्। तूर्णं गम्यतां श्वशुरगृहम्। हूं गच्छतु तावत्।

बाबू—भवतु। मध्येऽन्तरायः (सर्वाणि पुस्तकादीनि क्षिपति। अन्तर्गत्वा वस्त्रभूषणादीनि उपनेत्रं च धृत्वा प्रस्थाय) रे कुत्र गताऽसि। गत्वा शीघ्रमायामि।

वसन्तवाणी—(अन्तत एव) गम्यतां, गम्यताम्। (गच्छति)।

(धारवाडनगरे मालतीनिलयं नाम गृहं तत्र देशपाण्डे नागेशरायः आसन्द्यामुपविष्टः- सहसा भार्या शालिनी समागत्य)।

शा० पुत्रः शिवानन्दः डाक्टरपदभाग्भूत्वा कर्णाटकविश्वविद्यालये स्थानं प्राप्य वर्षमभूत्। पुनरपि न तस्य विवाहः प्रस्तूयते। कन्यापितृभिर्नैकः गृहाङ्गणं प्रतिदिनमलंक्रियते। तथापि भवतां तत्र विषये तूष्णीं स्थितिः। किन्विदम्?

नागेशरायः—रे त्वया किं ज्ञायते। तस्य कृते मया बहूनि धनानि व्ययितानि। विवाहानन्तरं भार्यावशगतेन तेन न कापर्दिकापि दीयते। अयं कलिकालः। तस्य मासिकं वेतनं सहस्रम्। इदानीं केवलं द्वादशसहस्रं करगतम्। पुनर्द्वादशसहस्रमवशिष्टम्। कन्यापितृभिः कन्यया साकं यदि एतावन्ति सहस्राणि दीयन्ते तर्हि विवाहः। नो चेदधुना न।

शालिनी—तर्हि कन्यायाः कुलरूपादिकं न विचार्यम्।

नागेशः—किं रूपेण मम।

शालिनी—एवं न कर्तव्यम्। दौहित्री सुशीला बी० ए० परीक्षायां प्राथम्यमधिगतवती। अनुरूपायास्तस्याः स्नुषाकरणेन शोभनं भवति सुवर्णे रत्नमिव।

नागेशः—मूढे! दरिद्रेण तेन किं दीयते कन्यां विना। तामानीय गृहे दरिद्रलक्ष्मीं न स्थापयामि।

शालिनी (कर्णौ पिधाय) शान्तं पापम्। भवत्पुत्रिकापुत्री खलु सा। कथं दरिद्रलक्ष्मीर्भवति।

नागेशः—तस्य दरिद्रदामोदरस्य करग्रहणेन पुत्रिकाप्येवं संवृत्ता (क्रोधेन) मास्तु स प्रस्तावः। गच्छ शीघ्रम्! चहां यच्छ। ममान्यत्र गमनं वर्तते। अपसर (गच्छति शालिनी) अंतः प्रकोष्ठे उपविष्टः शिवानन्दः—धनपिशाचेरस्य पितुः वाक्श्रवणेन मज्जीवितं सर्वं स्वप्नप्रायं भविष्यतीति मन्ये। निश्चलं मम मनः कदापि न चलति तस्या मोहिन्या हृदयहारिण्याः मन्दहासमुखदर्शनं यावत्? पत्रिकायां सुशीलायाः प्रतिकृतिदर्शनेन पुनरंकुरितं प्रेम। कदा वा तस्याः पाणिपीडनेन कृतकृत्यो भवामि। नाहं पौरुषवादी एतादृग्विषये। "दैवमेव परं मन्ये" (अंतर्गत्वा गृहेदेवतां बनशंकरीं नमस्करोति, पुनर्वस्त्रादि धृत्वा) (शालिनीम्) अम्ब! गच्छामि तावत्। विश्वविद्यालयस्य वेला अतिक्रामति।

शालिनी-शिवु! पानीयं सिद्धम्। पीत्वा गच्छ (बहिः प्रकोष्ठे पितुः पुरत आसन्द्यामुपविश। चहां ददाति शालिनी द्वाभ्यामपि। द्वावपि तूष्णीं चहापानं नाटयतः। गच्छति शिवानन्दः)।

शालिनी—(गच्छंतं शिवानन्दं निरूप्य) पश्यतु भवान् शिवानन्दः दृप्तवृष इवेदानीं संवृत्तः अस्य कीर्तिविशाला। विद्यार्थिनः प्राचार्याश्च तमभिनन्दन्तीति मया श्रुतम्। गृहगतस्य तस्य मुखं सर्वदा निर्विण्णं वर्तते। न किमप्युच्यते भवता (सहसा समायाति पेटिकाहस्तो बाबूराय.)।

शालिनी—(उत्थाय) आगच्छागच्छ। बाबू०। कुशलम्? सुशीला वाणी च कथम्?

बाबूरायः—कुशलम् (नागेशं नमस्कृत्वा) नमस्कारः।

नागेशः—(उपनेत्रमुपरि कृत्वा) उपविश। (शालिनी चहामानीय उभाभ्यां ददाति)।

नागेशः—बाबू ! किमिदानीं कुत्र गन्तासि। कुशलं कच्चित् ?

बाबूराय।—( किञ्चिद्विलम्ब्य ) सुशी, बी. ए. परीक्षायां प्राथम्यमधिगतवती।

नागेशः—पत्रिकायां दृष्ट्वा सन्तोषः समजनि। किं पुनः ?

बाबूरायः—तस्याः विवाहमंगलं द्रुतं निर्वर्तनीयमिति वाण्या मनीषा।

नागेशः—निर्वर्त्यताम्। वरोऽन्वेषितो वा।

बाबूरायः—किं पुनरन्वेषणम्। अनुरूपः शिवानन्द एव वर्तते दीर्घायुः। श्वश्र्वा अपि तत्र विषये सम्मतिर्दर्शितपूर्वा।

नागेशः—रे मम पुत्रविषये किमपि किमपि मा भण स तु वर्षद्वयानन्तरं विवाहं-कर्तुकामः। अन्यमन्विष्य त्वत्कार्यं साधय।

बाबू०—(सहसांतर्गत्वा) श्वश्रूं दृष्ट्वा। अन्यवरान्वेषणमुच्यते श्वशुरपादैः। ( तेन सह शालिनी सहसा समागत्य नागेशं प्रति ) शालिनी—किमुक्तम् ?

नागेशः—रे, त्वं तूष्णीं तिष्ठ।

शालिनी—पुत्रस्यापि तस्यां प्रेम। तमविचार्य सहसा किमिदमुच्यते।

नागेशः— रे अंतर्गच्छ (जामातरं दृष्ट्वा) एकदोक्तं न श्रुतम्। ( द्वावप्यन्तर्गच्छतः शालिनी बाबूरायश्च)।

शालिनी—( बाबूरायं ) वत्स ! ! अहं किंकरोमि मन्दभाग्या। तादृक्स्नुषाधिगमो मद्भाग्ये नास्ति। एतेषां कदर्यत्वमत्र दौष्ट्यमावहति। द्वादशसहस्रदातैव मत्पुत्राय कन्यां दातुमर्हतीत्येषामभिमतम्।

बाबू—अहं कथं दास्यामि ? भवतु गच्छामि ( अधोमुखी तिष्ठति शालिनी ) गच्छति बाबूरायः )।

( बाबूरायगृहेऽन्तः सुशीला शिवानंदस्य प्रतिकृतिं गृहीत्वा )।

सुशीला—प्रिय ! कदा वा तव वशगा भवामि। प्रियामेनां संतप्तां कदा सान्त्वयसि वर्षा चातकीमिव। वर्षद्वयं सञ्जातं पत्रमुखेनापि त्वां न दृष्टवती। प्रिय ! मां द्रुतं गृहाण। ( हृदये प्रतिकृतिं निदधाति )।

बाबू—सुशी, सुशी. ( द्वारं हस्तेन ताडयति ) ( सुशीला सहसा प्रतिकृतिं वस्त्रान्तर्धृत्वा द्वारमुद्घाटयति। प्रतिकृतिः सहसा पतति भीत्या गृह्णाति ) ( निर्विण्णमुखमुद्रः बाबूः आसन्दिकायामुपविष्टः)।

सुशीला—( अंतर्मातरं ) अंब ! पप्पा समागतः। किन्तु निर्विण्णः।

शालिनी (बाबूरायं) किमभूत् ? किमभूत् ?

बाबूरायः—किमभूत् ? किमभूदिति। धनपिशाचेस्तव पितुः पुरतो गन्तुमेवाहं नाशक्नवम्। द्वादशसहस्रदाता एव पुत्रकाय कन्यादाता इति तस्य वाक्।

शालिनी—तर्हि अंबा किमब्रवीत् ।

बाबू०—अम्बया किमुच्यते । तूष्णीं स्थीयते ।

शालिनी—शिवानन्दः ।

बाबू०—शिवानन्दो नासीत् ।

शालिनी—तर्हि किं कार्यम् ?

बाबू०—तर्हि किं कार्यम् ? ( द्वावप्यश्रुमुखौ दृष्ट्वा ) ।

सुशीला—अम्ब ! मत्कृते युवयोर्दुःखम् । यद्यहं नाभविष्यम् तर्ह्येवमपि नाभविष्यत् ( सहसा मूर्च्छति ) ।

बाबू०—समाश्वसिहि । समाश्वसिहि कुमारि ।

बाबू०—( तामुत्थाप्य ) बाले ! नवमल्लिकां त्वां वसन्तचूते संयोज्य वयं सुखं अनुभवामः । तदर्थमेष प्रयत्नः । मम नूतनगृहमेकमवशिष्टं । इदमेव विक्रीय तव विवाहं करिष्यामि । मा अधीरा भूस्तावत् ।

सुशीला—पितः ! तर्हि भ्रातुः पञ्चवर्षदेशीयस्य गतिः का ? पुनर्युवयोः कुत्र स्थानम् ?

बाबू—तत्पुरतः । निश्चितो मयैष एवोपायः । त्वमन्तर्गच्छ । ( सा गच्छति ) ।

बाबू०—( वसन्तवाणीं ) बलवन्तरायेण गृहमपेक्ष्यत इति श्रुतम् भवनमिदं विक्रीय त्रिंशत्सहस्रं सम्पादयामि । पञ्चदशसहस्रं विवाहकृते पुनः पंचदशसहस्रेण गृहमन्यद्गृह्णीमः ।

त्वं मातरं लिख एतद्विषये । अहं तावद्बलवन्तरायसविधे गच्छामि ( गच्छति ) ।

( नागेशरायगृहं पत्रवाहकः (पोस्टमैन ) समागत्य सौ० एस० एन० देशपाण्डे इत्युक्त्वा पत्रं ददाति । सहसा समायाति शालिनी, पत्रं गृहीत्वा उद्घाट्य दृष्ट्वा ) ।

नागेशः—रे ! कस्य पत्रम् ।

शालिनी—दुहितुः ।

नागेशः—किं लिखितम् ?

शालिनी—किं लिख्यते ?

नागेशः—पठ ।

अम्ब ! सप्रश्रयं विज्ञप्तिरियं दुहितुः ।

कुशलम् ।

ह्य एवागता एते । सर्वं ज्ञातम् । आस्माकीना सद्यः स्थितिः त्वयाधिगम्यत एव । तथापि सुशीलायाः विवाहः कर्तव्य एव । पितुर्मनीषा ज्ञाता । तदर्थं एभिरेभिरेव कष्टेन कृतं इदं केवलमवशिष्टं भवनं विक्रीय कर्तव्यं सांप्रतिकं अनुष्ठेयमिमि निश्चितम् । तदन्यत्र निश्चयः न कर्तव्यः । पुनः शीघ्रमेवैभिरागम्यते । एतेषामागमनात्पश्चात् विवाहदिनं निश्चेयम् । उपरितनविषये पिता त्वयैव समाधेयः । अन्यत्सर्वमरिष्टम् ।

तव प्रियपुत्री
वसन्तवाणी

( पत्रस्थं सर्वं अन्तरुपविष्टः शिवानन्दः शृणोति ) ।

नागेशः—हूँ । एवं वा । तन्त्रः प्रारब्वो दुहित्रा ।

शालिनी—कस्तन्त्रः । यदि भवानेव कन्यापिता र्ताह किं करिष्यति ।

## ( बाबूरायगृहम् )

वसन्तवाणी—किमभूत् ।

बाबू—सर्वं सम्पन्नम् । किन्तु त्रिंशत्सहस्रं दातुं तैर्न सम्मतिर्दत्ता इति केवलेन विंशतिसहस्रेण विक्रीय सम्प्रत्येव कर्गजं कृत्वा समागतोऽस्मि । तैरेव महता एतदुक्तं, यदि मयान्यल्लभ्यते सख्युस्तवेदं भवनं षण्मासाभ्यन्तरे निर्यातयेत यद्यपेक्ष्यते भवता । युष्माकं इतःप्रस्थानादनु वयमागमिष्याम इत्यप्युक्तम् । अतः सम्प्रत्येव हावेरीं गत्वा दिनं निश्चित्यागमिष्यामि । शुभस्य शीघ्रं खलु । ( गच्छति ) ।

## नागेशगृहम्

( नागेशराय आसन्द्यामुपविष्टः । बाबूरायः समागत्य ) ।

बाबू०—नमस्कारः ।

नागेशः—किम् ?

बाबू०—यथा श्रीमतां मनीषा तथैव दातुकामः सुशीलामिहागच्छम् सम्प्रति ।

नागेशः—आनीतानि वा धनानि ।

बाबू०—आनीतानि ।

नागेशः—र्ताह दीयतां यदि मे विश्वासः । इदानीमेव कर्गजं भवतु ।

बाबू०—भवतु किन्तु । दिनं निश्चित्येदानीमेव मंगलपत्रिकां मुद्रापयित्वा प्रख्यापनं भवतु । पश्चात् धनं दास्याम्येव आगामिनि सोमे विवाहो भवतु ।

नागेशः—( बेल्वादनम् ) भो कर्मकर गच्छ मुद्रणालयम् । एतत्सहस्रप्रतीः मुद्रापयितुं कथयित्वा समागच्छ ।

कर्मकर—यथाज्ञापयति भवान् (गच्छति)

नागेशः—भवतु इदानीं भोजनम् ।

( सायं पुनः ) नागेश—बाबूरायौ उपविशतः ।

नागेशः—आमंत्रणपत्रिका आनीताः, सर्वत्र प्रेषयामः संबन्धिनः । रूप्यकपत्रं (चैक्) दातव्यं पंचदशसहस्रे हस्ताक्षरं दत्त्वा गम्यताम् । समीपे वासुदेवमन्दिरे मंगलकार्यालयो- विद्यते । विवाहपूर्वक्रमः मद्गृहे एव भवतु, केवलं पत्नीपुत्रीभ्यां सहागन्तव्यम् । सर्वाव्यवस्था विधीयते ।

बाबूरायः—भवतु-कन्यापितृत्वं खलु नाम कष्टम् । गृह्यताम् । पंचदशसहस्ररूप्यकांकितमिदम् ।

नागेशः—(गृहीत्वा) महान्संतोषः । रविवारे एवागम्यताम् । आगच्छामि । (गच्छति) । ( सोमवारे प्रातःकाल:

विवाहमंगलार्थं सर्वे सज्जा भवन्ति )

नागेशः—शिवानन्दमाकारय ।

शालिनी—शिवानन्दस्तूष्णीं वर्तते । आकारितोपि नायाति ।

नागेशः—( स्वयं गत्वा ) शिवानन्द ! आगच्छ ।

शिवानन्द :—पितः ! किं शिवानन्देन ।

नागेशः—अरे तव विवाहो न मम

शिवा—तवैव भवतु ।

नागेशः—मूर्ख ! त्वया यत्कांक्षितं तदेव कन्यारत्नं निश्चितम् ।

शिवानन्दः—तदहं जानाम्येव, किन्तु ।

नागेशः—किन्तु किम् ?

शिवानन्दः—कन्यापितृत्वमजानतैव त्वया स भृशं पीडितः बाबूरायः ।

नागेशः—मूर्ख ! एतावदेवैतावद्वात्सल्यम् ?

शिवानन्दः—सर्वं मया ज्ञायते । पूर्वं सर्वं धनं तेषां प्रतिनिवर्त्यताम् । पश्चान्ममागमनं, सर्वं जानामि तव लुब्धताम् ।

नागेशः—मूर्ख मम पुरतो विकत्थसे ?

( चपेटां ददाति ) द्रुतं बहिर्गच्छ ।

( गच्छति शिवानन्दः तथान्येन मार्गेणागत्य पितुरन्तःप्रकोष्ठे मञ्चकस्याध उपविशति ) ।

शालिनी ( नागेशं ) सर्वं नष्टम् । मया पूर्वमेवोक्तम्, युवानं सुशीलं पुत्रकं विचार्य सर्वं क्रियतामिति । तन्न श्रुतं भवता । इदानीं कुत्र गत इति न जाने । तत्र वधूमलंकृत्य वधूपरिवारो मां त्वरयति ।

नागेशः—सत्यं प्रिये ! कुत्र गत इत्यहमपि न जाने । बहुप्रयत्नः कृतस्तस्यान्वेषणे । एतज्जले तैलमिव सहसा प्रसृतम् । सर्वैरुद्घोष्यते पितुर्धनाशया एवमभूदिति । किं करोमि । त्वं गच्छान्यत : पश्य । अहमपि तथा ।

(सहसा अन्तः प्रकोष्ठे प्रविशति । तत्र बनशंकर्याः प्रतिकृतेः पुरतः स्थित्वा) देवि ! महापराधः कृतः, पुत्रो मम शीघ्रमायातु । नोचेन्ममेदानीं मानहानिर्भविता ।

"सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते" । अन्ते मरणमेव शरणं मे । ( इत्युक्त्वा सहसा छुरिकां हस्ते कृत्वा) शिवानन्द ! त्वं दीर्घायुर्भूयाः । त्वां विद्वांसमनादृत्य धनाशया मया यत्कृतं तस्य फलमिदमनुभवामि । सर्वथा देवास्ते स्वस्ति कुर्वंतु । अहमिदानीं साधयामि ( हृदये छुरिकां निधातुकामः । सहसा बहिरागत्य शिवानन्दः हस्तं गृह्णाति)

शिवानन्दः—पितः ! किं व्यवसितमस्थाने ।

नागेशः—शिव ! शिव ! धन्योस्मि । त्वामनादृत्य मयैव सर्वमनुष्ठितमिति ते क्रोधः ? त्वया यदुच्यते तत्क्रियते मया ।

शिवानन्दः—र्तहि वाक्प्रदानादर्वाक् वर-दक्षिणात्वेन परिगृहीतं सर्वं प्रतिनिवर्त्यताम् ।

नागेशः—तथास्तु ।

( विवाहमंगलं )

तदेव लग्नं सुदिनं तदेव
ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव
लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ।

सुमुहूर्ते सावधान, सुलग्ने सावधान ।

बाबूरायः—सुशीलानाम्नीमिमां कन्यां प्रति गृह्णातु भवान् ।

शिवानन्दः—(कन्यां हस्ते करोति) प्रति-गृह्णामि ।

सुशीला सुदती कन्या
पुत्रवत्पालिता मया ।
इदानीं तव पुत्राय
दत्ता स्नेहेन पाल्यताम् ।

मङ्गलं भगवान् विष्णु—
र्मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो
मङ्गलायतनो हरिः ।।

ॐ स्वस्ति

वरदक्षिणारूपकं सम्पूर्णम् ।

रचयिता—वि० श्रीसाम्बदीक्षितः
गोकर्णः ( N.K. )

# ताशस्तोत्रम्

ले० श्रीदेरकविः—रत्नगर्भतैलङ्गः

नमोऽस्त्वनन्ताय सचित्रमूर्तये
द्विरूपकृष्णारुणवर्णकान्तये ।
चतुर्विभागैस्तु विनोददायिने
कराग्रमध्ये युगधारिणे नमः ॥१॥

आज्ञेष्टिकानागरपक्षिकाश्च
राज्ञी ससैन्या नृपसेवकाश्च ।
संसारमध्ये सकलार्थदा ये
दशत्रि (१३) संख्यान् हि
नमामि ताशान् ॥२॥

अनेकरूपं हि भवेत्तु ताशकम्
अनेकरूपं च भवेत् सुखेलनम् ।
अनेकरूपं च भवेत् तु रंजनम्
अनेकरूपं तु नमामि बावनम् ॥३॥
(५२)

यो देवः सर्वभूतेषु
नृप (बादशाह) रूपेण संस्थितः ।
नमस्तस्मै नमस्तस्मै
नमस्तस्मै नमो नमः ॥४॥

या देवी सर्वभूतेषु राज्ञी ( बेगम )
रूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥५॥

यो देवः सर्वभूतेषु भृत्य (गुलाम)
रूपेण संस्थितः ।
नमस्तस्मै नमस्तस्मै
नमस्तस्मै नमो नमः ॥६॥

यो देवः सर्वभूतेषु दिशा ( दहला )
१०
रूपेण संस्थितः । नमो नमः ॥७॥

या देवी सर्वभूतेषु निधि ( नहला )
९
रूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥८॥

या देवी सर्वभूतेषु सिद्धि ( अट्ठी )
८
रूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥९॥

ये देवाः सर्वभूतेषु ऋषि (सत्ती)
७
रूपेण संस्थिताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यो नमो नमः
॥१०॥

६
ये देवाः सर्वभूतेषु ऋतुरूपेण संस्थिताः
नमस्तेभ्यो नमस्तेभ्यो
नमस्तेभ्यो नमो नमः ॥११॥

ये देवाः सर्वभूतेषु पचतत्त्वेति
५ संस्थिताः ।

नमस्तेभ्यो नमस्तेभ्यो
नमस्तेभ्यो नमो नमः ॥१२॥

ये देवाः सर्वभूतेषु वेद—
४
रूपेण संस्थिताः ।
नमस्तेभ्यो नमस्तेभ्यो
नमस्तेभ्यो नमो नमः ॥१३॥

ये देवाः सर्वभूतेषु (३)
गुणरूपेण संस्थिताः ।
नमस्तेभ्यो नमस्तेभ्यो
नमस्तेभ्यो नमो नमः ॥१४॥

यौ देवौ सर्वभूतेषु द्वित्व (२)
रूपेण संस्थितौ ।
नमस्ताभ्यां नमस्ताभ्यां
नमस्ताभ्यां नमो नमः ॥१५॥

यो देवः सर्वभूतेषु
ऐक्यरूपेण संस्थितः ।
१
नमस्तस्मै नमस्तस्मै
नमस्तस्यै नमो नमः ॥१६॥

धर्मार्थदाता सुखदः सदैव
दुःखादिहारी नवनित्यखेलः ।
विनोदकारी धनदश्च सद्यः
यथाविहारी वनितारसज्ञः ॥१७॥

ये भजंति सदा लोके
पुराणं वामनं (वाबनं) सदा ।
भवन्ति ते विजयिनः
केलिकौतुककर्मसु ॥१८॥

ये निन्दन्ति सदैव पल्लवमिदं
यस्मिन्मनो रज्यति
प्रायस्ते हि भजन्ति रौरवमहो
लोका मृतेरुत्तरम् ।
ये कुर्वन्ति घृणामनेन
सह ते हासस्य पात्राणि वै ।
जायन्ते च मुखे ददत्यथ—
जनास्तेषां हि कृष्णोल्मुकम् ॥

अत्र सैन्यरूपेण ( एक-इक्का ) पत्रादादाय दशपत्राणि पर्यन्तम् । भृत्यराज्ञीनृपरूपेण च ( गुलाम बेगम बादशाह ) पत्राणि विवक्षितानि । पल्लवपत्रे ( ताश ) त्यादिनाम्ना पत्राणि ( पत्ते ) निर्दिष्टानि । ५२ संख्यकानामेषाम् ( हिन्द्याम् बावन इति ) वामनपुराणं तद् एव वामनरूपेण कल्पितास्य खेलनस्य स्तुतिरभिप्रेतास्ति । आज्ञा (हुकुमादेश) इष्टिका ( ईंट ) नागरं ( पान ) पक्षिका (चिड़िया) इति चतुर्विभागैः कृष्णारुणवर्णाद्वयेन विनोदकारकाय ताशस्वरूपाय वामन-( बावन ) देवाय समर्पितम् ।



# आर्थिक कार्यक्रम के अन्तर्गत

# गऊशालाओं का विकास

गऊशालाओं के आधुनिकरण के लिए त्रिबिन्दु कार्यक्रम का प्रारम्भ

पशुओं की सुरक्षा

गऊशालाओं को डेयरी एवं सम्वर्धन इकाई के रूप में

गऊशाला व्यवस्थापकों के लिए विस्तार प्रशिक्षण का संधारण ।

दुग्ध अभिवृद्धि ।

गोबर गैस प्लान्ट लगाने के लिए अनुदान ।

जर्सी सांड क्रय हेतु अनुदान ।

गऊशालाओं के वार्षिक लक्ष्यों का निधारण ।

गऊशाला भूमि में वृक्षारोपण का विशेष अभियान ।

( राजस्थान सरकार द्वारा प्रसारित )

# सत्यकामजाबालविषये अवशिष्टांशः

श्रीदीनानाथशास्त्री, सारस्वतः विद्यावाचस्पतिः ।
१ बी १६ लाजपतनगरं ( नई दिल्ली २४ )

पूर्वाऽनुवृत्तम्—

श्रीगौतमस्य अर्थवादरूपमेतद् वचनमपि धर्मसूत्रेषु सुप्रसिद्धम्—अथास्य ( शूद्रस्य ] वेदमुपशण्वतः त्रपुजतुभ्यां श्रोत्रप्रविपूरणम्। उदाहरणे जिह्वाछेदः, धारणे शरीरभेदः,(गौ० ध० सू० २ । ३ । ४) तदा धर्मशास्त्रज्ञाता श्रीगौतमः शूद्राय वेदाधिकारप्रदम् उपनयनम् आचार्यकुले प्रवेशं च कथं नाम दातुं शक्तः ? अनेन प्रवेशदापनेन उपनयनेन च सिद्धमेतद् यद्—जाबालो न अत्रैवर्णिकः, न च व्यभिचारजः । प्रतिपक्षिणोऽनुमानान्येव व्यभिचारीणि सिद्धानि । सत्यकामो व्यभिचारी न सिद्धः ।

बृहदारण्यकस्य वंशब्राह्मणे बहूनां वंशानां नाम पितुर्नाम्ना नागत्य मातुर्नाम्ना समेति । तत् किं प्रतिपक्षिद्वारा तेपि व्यभिचारिणो निम्ना वा मन्येरन् ? शतपथब्राह्मणे (१० । ६ २ ।-६) जाबाल औपमन्यवो मतः । तदा तं बलाद् व्यभिचारिणमाख्यातुं प्रतिपक्षिणो लेखनी कथं नामातुरा ? तदत्र किमपि रहस्यं तु न ? किं स्वपारम्परिकगुरोर्दयानन्दस्वामिन ऋणपूर्त्यर्थं सत्यकामस्य अज्ञातकुलेलेखनसूत्रस्य भाष्यं नास्तीदम् ? यत्—तदनुयायिन एतत्सिद्धौ सफला न समजनिषत; अस्माकमियं या नव्यस्फूर्तिरुत्पन्ना, तेन तस्य साहाय्यप्राप्तिर्भवेत् ? बृहदारण्यकोपनिषदि सत्यकामजाबालस्य 'यथा मातृमान् पितृमान्, आचार्यवान् ब्रूयात्; तथा तद् जाबालोऽब्रवीत्— मनो वै ब्रह्म ( ४ । १ । ६ ) इत्यादिना प्रशस्तमातृत्वं प्रशस्त ※ पितृकत्वं तथा प्रशस्ताचार्यकत्व च प्रतिपाद्य प्रतिपक्षिणोऽनुमानानि विध्वंसितानि—इति सङ्केतितचरम् ।

'गोत्रस्यार्थोऽत्र वर्ण इत्येव, यतो हि 'किं गोत्रो नु सोम्य ! असि' अस्य प्रश्नस्योत्तरे 'नैतद् अब्राह्मणो विवक्तुमर्हति' इति वाक्येन तु अत्यन्तं स्पष्टीकृतम् यत्—सत्यकामस्य पिता कोपि नासीत् । एतावदेव न किन्तु तस्य कोपि वर्णोपि नासीत् । अन्यथा गोतमस्य एतत्कथनस्य आवश्यकतापि नासीद् यद्—ब्राह्मणं विना एतावत् सत्यं कोपि कथयितुमेव न शक्तः ।

प्रतिपक्षिण इति स्वकीयकथनेन प्रतिपक्षिण उक्तिर्व्यभिचारिणी सिद्धा । जाबालो ब्राह्मणस्य बालकः सिद्धः । यतो हि 'ब्राह्मोऽजातौ' ( पा० ६ । ४ । १७१ ) वेदाङ्गस्य एतत्सूत्रेण ब्रह्मणः—ब्राह्मणस्य बालको जातो एवमपत्यार्थे 'ब्राह्मण' आख्यातुमर्हः । अन्यथात्वे तथा कथयितुं न शक्यम् । स्वसंस्कृतभाष्ये प्रतिपक्षिणा 'गोत्र' 'वर्ण'श्च

भिन्नभिन्ने मते। परमस्मिन् हिन्दीनिबन्धे तेन 'गोत्र' शब्दो वर्णार्थको मतः। किमयं लेखको भिन्नभिन्नरूपस्तु न ? अथवा स स्ववचनविरोधाद् अपास्तः।

वादिन एतत् कथनं यदेतेन एतदपि सिध्यति यत्—सत्यकामस्य जनन्यां कश्चिद्-दोषोऽवश्यमासीत्। दोषः प्रायो गोप्यते, न प्रकटीक्रियते। सत्यकामेन मातृदोषो न गोपितः अतश्च ऋषिणा स ब्राह्मणः प्रोक्तः' इदं वादिनः कथनं कियद् असत्यम् ? अदसीय आशयस्तु अयं यत्—सत्यकामस्य माता स्वदोषं जुगोपयिषति स्म, परं तद्-बालकः सत्यकामस्त दोषं प्रकटीचकार। अयि महाशय ! यत् किमपि माता आचार्यमाख्यातुं जाबालं कथितवती; तदेव तु सत्यकामेन आचार्यं प्रति प्रोक्तम्' ततो न्यूनाधिकं सत्यकामेन किमपि नोक्तम् माता स्पष्टमवोचत्—'सत्यकाम एव जाबालो ब्रवीथाः' इति (अतोऽहं सत्यकामो जाबालोऽस्मि—इति ब्रुवीथा आचार्यचरणानुपेत्येति) अयं वादिनैव तु कृतोर्थः।

तद् यदा दोषो गोपाय्यते वाद्यनुसारम् परं माता किञ्चिदपि न अजूगुपत् ? किन्तु-तया महता आटोपेन स्ववक्तव्यमुक्तम् आचार्यं प्रति वक्तुम्। तदा तेन स्पष्टं यत्—सत्यकामस्य मातरि कोपि दोष आसीदेव न। इति स्पष्टं जातम्। न ज्ञायते यद्—वादी जबालायामविद्यमानमपि दोषं तस्यामासञ्जयितुं कथं नामातुरः ? आचार्यस्त बालकं स्पष्टं ब्राह्मणं वक्ति–यद् ब्राह्मणाद् भिन्नो बालक एवं वक्तुं न शक्तः। दयानन्दिना स्वामि–वेदानन्देन बृहतः 'सत्यार्थप्रकाश' स्य टिप्पण्याम् उक्त-कारिऽकाया एषोर्थः कृतः—'ऐसी बात अब्राह्मण नहीं कह सकता' (पृ० ७६); तदा वादी तत्र असत्यताव्यवहारं कथं नाम कुर्वन्नस्ति ? आचार्येण नैतदुक्तं यत्—त्वया सत्यमुक्तम्, अतोऽत्रैवर्णिकमपि, जारजमपि त्वां वयं ब्राह्मणं निर्मिमीमहे; किन्तु एतदभिहितं यद्–ब्राह्मणपुत्रतोऽतिरिक्तमन्य एवं न वक्तुं शक्तः।

कश्चिद् व्यभिचारिणीपुत्रो गुरुकुलमागच्छेत्, तस्य माता वदेत्—अहं व्यभिचारिण्यस्मि, तस्याः पुत्रोपि ब्रूयाद्' अहं व्यभिचारिण्याः पुत्रोस्मि। किं वादिनस्तं ब्राह्मणं निर्मास्यन्ति ? उपनयनं च तस्मै दातुं सन्नद्धाः स्युः ? यदि कश्चिद् असत्यव्यवहारं कुर्यात्; स्वमातापित्रोः परिचयं यथावन्न दद्यात् तत् किं वादिनः ब्राह्मणं सन्तमपि तं ब्राह्मणत्वात् पातयेयुः भवतां केचिद् ईदृशा नेतारः प्राप्येरन्, यैः स्वकीयजन्मविषये यथावद् नोक्तम्; तैर्यत् प्रोक्तं तत् तदनुयायिभिरसत्यं मत्वा महत् परिश्रम्य तद्विरुद्धा भिन्नभिन्नोत्पत्तिराख्याता, प्रत्युत पितुः, पुत्रस्य वा तथा स्थानस्य नामस्वपि मिथो महान् भेदः; यदि ते नेतारः प्रारम्भादेव सत्यमवक्ष्यन् ततस्तच्छिष्यैरेतावत्—परिश्रमो न कृतोऽभविष्यत्; तत् किमेतदसत्यव्यवहारेण वादी तान् ब्राह्मणत्वाद् न्यपातयिष्यत्।

अग्रे वादी स्वमते परिवर्तनं कृत्वाभिधत्ते—जाबालस्य प्रशंसा ऋषिणा कृता।

एतत्तु युक्तरूपं जातम्; परन्तु ततोऽधिक-प्रशंसापात्रं जबाला ग्रासीन्नो वा? इति विचारणीयम्। वस्तुतस्तु जबालाया एव प्रशंसा भवितुमर्हा तया स्वपरिस्थितौ न किञ्चिदपि गोपितम्। सत्यघटनायाश्च उल्लेखः कृतः'।

इयं वादिनो वार्ता स्वप्राक्तनाभिमततो विरुद्धा, वादिनोनुसारं दोषो गोप्यते; परं जबालया तत्र कथं न गोपनं कृतम्? एतेन स्पष्टं-यत्—जबालायां कोपि दोष ग्रासीदेव न। मातुर्नाम्ना बालकानां नाम भवत्येव इत्यस्माभि॒प्राग् वंशब्राह्मणानां बहून्युदाहरणानि उपनिषत्तो दत्तानि। ग्रतस्तत्र गोपनस्य कोपि प्रसङ्गो नास्ति। ग्रयं चोरस्तु प्रतिपक्षिणो हृदये स्वयमारूढोऽस्ति।

वादी वक्ति—'गोत्रशब्देन सत्यकामस्य ग्राशयः स्ववर्णेनासीत्‌ तदेव तु ऋषिणा प्रोक्तम्—'ग्रब्राह्मणो नैतत् कथयितुमर्हति। 'ग्रगोत्र एवमभिधातुं नार्हति, एवं नोक्तम्। गोत्रस्य तु तेनोक्तं यद्—न तदहं जाने। इमामेव सत्यतां दृष्ट्वा गुरुणा प्रोक्तम् यदि ग्रयं जाबालो जन्मनो ग्रब्राह्मणोऽभविष्यत्, तर्हि किमपि कृत्रिमं गोत्रमवश्यमवक्ष्यत् परमकथनेनैव एतत् स्पष्टं यद्–ग्रयं ब्राह्मणस्य बालकः। पुरा प्रायो ब्राह्मणैः पाठ्यते स्म। परं गोत्रस्य कथने किञ्चिद् विशेषः क्रियते स्म। प्रतिपक्षिणो मान्येन मनुस्मृतिटीकाकृता श्रीमेधातिथिनापि इत॒किञ्चित्प्रकाश॒ कृतः, यथा च—

गोतमस्यापि न ततो वचनाद् ब्राह्मणोऽयमिति ग्रवगमः, प्रागेव ग्रसौ तं ब्राह्मणं वेद, गोत्रं न वेद। गोत्रप्रश्नेन चरणप्रश्नो वेदितव्यः। तत्र उपनयनभेदोऽस्ति' (मनु० १०। ५०) तदनुसारमुपनयनसूत्रे ग्रन्थयः क्रियन्ते। ग्रतो गोत्रजिज्ञासितेपि तज्ज्ञानाऽभावदशायां तदीयब्राह्मणत्वजन्यमात्रतया ग्राचार्येण सन्तोषः कृतः।

पुरा ग्राचार्यकुले ब्राह्मणा एव प्रविशन्ति स्म। तेषां गोत्रनिश्चयस्तद्ब्राह्मणत्वाज्ञानदाढर्यार्थं क्रियते स्म। ग्रथवा मेधातिथिकथनाद् गोत्रप्रवरादिप्रश्नः कृतः। ग्रथवा शूद्राणां गोत्रर्षयो न भवन्तीति ज्ञानार्थं यत्—किमयं शूद्रस्तु नास्ति, ग्रतः प्रश्नोऽयं कृतः। तदा वादिन एतत्कथनं यद्—जबालाया एतज्ज्ञानमपि नासीद् यद्—तस्या॒को वर्णः, ग्रथवा एतन्निर्णेतुमक्षमा ग्रासीद् यद्, ग्रात्मन॒कं वर्णं प्रतिपादयेत्? सत्यकामः स्ववर्णं जिज्ञासुरासीत्' एतदादिकं सर्वं निरस्तम्। यतो हि गोत्रस्य वर्णार्थो न भवति, किन्तु वर्णस्य ऋषेरर्थो भवति।

ग्रग्रे वादी ग्रभिधत्ते-उभयोः सत्यतया उभौ ब्राह्मणवर्णौ जातौ। वादिनोऽस्मिन् कथने न किमपि प्रमाणम्? ग्राचार्येण तौ ब्राह्मणौ न निर्मितौ, किन्तु तेन तौ ब्राह्मणवर्णकौ ज्ञातौ। ग्रन्यथा ग्राचार्यस्य 'नैतद् ग्रब्राह्मणो विवक्तुमर्हति इति वाक्यस्थाने इदं वाक्यमभविष्यत्—'ग्रस्माभिस्त्वं' ब्राह्मणो निर्मीयसे' परमेतादृशवाक्याऽसत्त्वात् प्रतिपक्षिणः कापि

इष्टसिद्धिर्न । यतो हि सत्यभाषिणोपि श्रीरामहरिश्चन्द्रादयः कस्यापि द्वारा ब्राह्मणा न निर्मिताः न च प्रोक्ताः । वादिनापि च स्वयं लिखितम्—'ऋषिराह—त्वं ब्राह्मणोसीति, कथमृषिणा तस्मिन् ब्राह्मणत्वं व्यवस्थापितम् । जाबालस्य सत्यभाषणमेव हेतुस्तत्र । तत्र विचार्यते—अस्ति काचित् शास्त्रकाराणामाज्ञा, यः सत्यं वदेत्,, स ब्राह्मणत्वं प्राप्नुयायादिति । नास्त्येव तादृशी काचिदाज्ञा । तर्हि किमौपनिषदकाले एव आसीत् काचित् परिपाटी, सत्यवादिनं यं कमपि ब्राह्मणं वक्तुमिति । सापि नोपलभ्यते' । 'रामो द्विर्नाभिभाषते' इति वदत्यपि रामे न केनापि ब्राह्मणत्वं प्रतिपादितम् । विश्वामित्रो महद् तपस्तप्त्वैव ब्राह्मणत्वं जगाम; न सत्यमभिभाष्य । अन्येपि हरिश्चन्द्रादयो बहवः सत्यवादिनो न ब्राह्मणतां जग्मुः । कथं तर्हि जाबाल एव गुरोः कृपापात्रम्. किञ्च गुरुस्तु सत्यवादित्वमेव[1] हेतूकृत्य ब्राह्मणत्वं तस्य अन्वमिनोत् । हेतुस्तु स व्यभिचार्येव रामादिदृष्टान्तेन समर्थयितुं शक्यते' ( छान्दोग्य संस्कारभाष्ये पृ० ३२–३३ ) ।

एतेन प्रतिपक्षिणः पक्षश्छिन्नः । जाबालो जन्मनैव ब्राह्मणः सिद्धः । इदमीदृशमवेद्याऽस्त्रम्, वद्—वादिनः तर्कतोमराणि एतेन अनायासं खण्डयन्ते । इति विचिन्त्यैव वादी 'अब्राह्मण' पदे 'ब्राह्मण' शब्दस्य अर्थं परिवर्तयन् अङ्कयति—इदमपि सम्भवि; 'अब्राह्मण' पदेन आचार्यस्य 'ब्राह्मणवर्णता नेष्टा भवेत्, प्रत्युत 'ब्रह्मज्ञानस्य अधिकारी इष्टो भवेत् । त्वमवश्यं ब्रह्मज्ञानस्य अधिकारी असि' । परं वादी 'नैतद् अब्राह्मणो विवक्तुमर्हति–इति वाक्यस्य उक्तार्थं कथं कर्तुमीष्टे ? यदा च तत्र शब्दयोजना ईदृग्विधा नास्ति । किं वादिनः स्वेच्छास्ति--पदानामर्दनविमर्दनं कृत्वा वैदिकशब्दानामर्थेषु स्वेच्छामेव प्रमाणीकुर्यात् ?

( क्रमशः )

१—हेतूकृत्य–इत्यत्र च्विः, अत एव ल्यप् ।

ॐ

# प्रतापसिंहो जयतु नृसिंहः

कविः—डॉ० श्रीधरभास्करवर्णेकरः, नागरपुरम्

प्रतापसिंहो जयतु नृसिंहो वीरव्रतधारी ।
म्लेच्छशत्रुसाम्राज्यविरोधी, महातपश्चारी ॥ ध्रु० ॥

महामतङ्गजसमास्थितं रिपुमाहन्तुं प्रबलम् ।
तुरङ्गसादी प्रचिक्षेप यो हठान्महाशूलम् ॥
महाशूलधारी.............. ॥ ध्रु० ॥ १ ॥

कन्योपायनदैन्योपेतं बान्धवगणमखिलम् ।
धिक्चकार निर्धनोऽपि नितरां स्वत्वधनो निखिलम् ।
स्वाभिमानधारी................ ॥ ध्रु० ॥ २ ॥

स्वातन्त्र्यार्थं गह्वरभवनं तृणकण्टकशयनम् ।
प्रस्तरासनं कदन्नाशनं यस्य सदाऽऽमरणम् ।
गिरिवनसञ्चारी............ ॥ ध्रु० ॥ ३ ॥

सङ्गरशौर्यं विमकवीर्यं तथात्मसामर्थ्यम् ।
अभूतपूर्वम् अगाधधैर्यं यस्य विपद्गाम्भीर्यम् ।
दिव्यशीलधारी................... ॥ ध्रु० ॥ ४ ॥

म्लेच्छप्रभावविहतात्मबले समाजे
धर्मे च वेदविहिते प्रविपद्यमाने ।
सिंहायितं चिरमरण्यचरेण येन
वीराग्रणीर्वसतु मे हृदि स प्रतापः ॥

# हल्दीघाटीयुद्धम्

[illegible] रालालशर्मा, जयपुरम्

इदं युद्धं हल्दीघाट्यां प्रतापमानसिंह-योर्मध्येऽभवत् । अकबरस्य साम्राज्यविस्तारेच्छाऽतीव प्रबलाऽऽसीत्, प्रतापे स्वदेशरक्षणभावना स्वातंत्र्यनिष्ठा च दुर्दम्याऽवर्तत । प्रतापेन शौर्यं प्रदर्शितं मानसिंहेन च कौशलं कृतं प्रतापस्य साधनानि परिमितानि आसन् । मानसिंहस्य पृष्ठेऽपरिमिता साम्राज्यशक्तिरासीत् । प्रतापस्य सेना अल्पैव, मानसिंहस्याऽनीकं तु अनल्पम् । प्रतापेन समरभूमिः त्यक्ता मानसिंहेन च विजयो लब्धः । तथापि लोकः प्रतापं प्रशंसति तस्य कीर्तिञ्च गायति । मानसिंहस्य विजयं सर्वं एव निन्दन्ति । एतदर्थमस्ति हल्दीघाटीयुद्धस्य महत्त्वम् ।

तत्समये प्रतापः गोगुन्दानगरे निवसति स्म । इदमासीत् उदयपुरजगरात् उत्तरदिशि अष्टक्रोशदूरे, चतुर्दिक्पर्वतश्रेण्या परिवेष्टितञ्च । मानसिंहः अकबरेणादिष्टः अजमेरनगरात् मांडलगढं आयातः । ततः गोगुन्दां गन्तुं द्वौ मार्गौ स्तः । एको दुर्गमः किन्तु ह्रस्वोऽस्ति, द्वितीयः सुगमः किन्तु लम्बोऽस्ति । मानसिंहः दुर्गमेण मार्गेण प्रयातः । महतीं सेनां कर्षन् स खमनौरनामकं ग्राममायातः । एषः ग्रामः गोगुन्दानगरात् अष्टक्रोशदूरे उत्तरपूर्वदिशि स्थितोऽस्ति । खमनौरनगरात् नातिदूरे दक्षिण-दिशि चतुर्भुजाकारा भूमिः पर्वतवेष्टिता आम्रवृक्षाऽच्छादिता च वर्तते । तत्र एको जलप्रपातोऽपि अस्ति । यत्र तत्र च शस्यक्षेत्राण्यपि सन्ति । अस्य चतुष्कोणक्षेत्रस्य समीपे एव सार्धक्रोशलम्बः पर्वतमध्ये संकुचितो मार्गोऽस्ति । अनेन मार्गेण द्व्यधिकाः अश्वारोहिणो न गन्तुं पारयन्ति । केषुचित् स्थानेषु तु एकः एव पुरुषः यातुं शक्नोति । क्रोशत्रयपारं मार्गोऽयम् प्रशस्तो भवति । गोगुन्दानगरं च गच्छति । अनेन दुर्गमेण मार्गेण मानसिंहेन स्ववाहिनी आनीता । तदासीत् महासाहसिकं कार्यम् ।

मानसिंहः ससैन्यः खमनोरग्रामसमीपे आगतः इति श्रुत्वा वीरः प्रतापः गोगुन्दानगरात् प्रस्थितः । सः प्रथमं प्रहारं कर्तुमैच्छत् । किन्तु तस्य सामन्ताः तम् निरुद्धवन्तः । प्रातः काले उत्तप्ते उग्रे जेष्ठमासे सः सेनासहितः मानसिंहस्य शिविरोपरि श्येनवत् पतितः । ततः संजातः लोमहर्षणः संग्रामः, यस्मिन् द्वौ पक्षौ अपूर्वशौर्येण महापराक्रमेण चाऽयुध्यताम् । तत्समये वीरप्रतापेन यः पराक्रमः कृतः मानसिंहेन च यत् रणकौशलं प्रदर्शितं अत्यद्भुतमासीत् । तां रण विद्यां पराक्रमकर्माणि च जना अधुनाऽपि गायन्ति, भविष्यति च गास्यन्ति ।

मानसिंहः सकौशलं निजसेनाम् व्यवस्थितवान् । तेन सा पंचभागे व्यूढा, अग्रः मध्यमः वामः दक्षिणः पृष्ठः भागश्च । इयं व्यवस्था

संग्राम-कौशलपूर्वकं कृता । तस्मादेव मानसिंहेन विजयः प्राप्तः । मानसिंहो न केवलं क्षत्रियरण-परम्परां समरविधिञ्च जानाति स्म । तेन तुर्काणां पारसीकानाञ्च समर विधिर्दृष्टः । बहूनि युद्धानि कृतानि विजयाश्च प्राप्ताः । तेन सार्धं दक्षिणपार्श्वयोः मुस्लिमसेनापतयः सांमरसामन्तः रामलूणकरणश्च आसन् । अग्रभागे च जगन्नाथ-कुशवाहस्त्रयश्च मुस्लिसेनापतयः नियुक्ताः । सुरक्षितसेनाभागो माधवसिंहस्य नेतृत्वे कृतः ।

वीरः प्रतापः स्वसेनायाः मध्यभागं नयति स्म । तेन न कापि व्यवस्था कृता । स तु अश्वारोहिणां प्रबलप्रहारविधिमेव अनुसरति स्म । तस्य दक्षिणपार्श्वे ग्वालियरराज्य-भ्रष्टः रामशाहतंवर आसीत् । वामपार्श्व-स्याध्यक्षः वीदाझाला नियुक्तः । महाभयसकुले स्थाने रामदासराष्ट्रकूटः स्थापितः । स चित्तौडरक्षकस्य दिवंगतस्य जयमलस्य सप्तम-पुत्रः आसीत् । प्रतापस्य वाहिनी परिमिता-आसीत् । अतः सः सुरक्षित—भागं न कृतवान् । अष्टादशदिनांके जूनमासे हल्दीघाटीमुखात् प्रलयंकरप्रपात इव रामदासस्य अश्ववाहिनी निसृता । मानसिंहस्याग्रभागः तं प्रहारं सोढुं नाशक्नोत् । अतः तस्याग्रभागः भग्नः दलितः वितरितश्चाभवत् । मुगलाः तुर्का अश्वारोहिणः द्रुतं पलायिताः । तेषु न एकोऽपि समर भूमौ दृढी भूत्वाऽतिष्ठत् । रामदासेन सर्वे एव निक्षिप्ताः । सैयदा अपि पलायतुकामा अभवन् । किन्तु तत्क्षणे माधवसिंहकुशवाहः स्वसेनासहितः स्थितं निरीक्ष्य तेषां सहायतार्थमायातः । तेन विना मुस्लिमसेना नहि स्वस्थाने स्थातुं पारयति स्म ।

अतिभयंकरां स्थितिमवलोक्य मानसिंहः सेनाग्रे आगतः । तस्य मुस्लिमसहायकसेनापतयोऽपि तत्रागताः । सर्वे च घोरं रणनिनाद कृतवन्तः । "सम्राट् अकबरः अयमुपैति, महतीं सेनां आनयति च" इति । तदा तुमुलं युद्धमभवत् । बदायूनोनामा मुस्लिम-इतिहासकारः तस्मिन् समये युद्धमध्ये एवाऽऽसीत् : तेन सर्वा स्थितिः निजनेत्राभ्याम् दृष्टा । सः कथयति द्वयोः पक्षयोः योद्धारः प्राणान् त्यक्त्वा स्वकीर्तिं रक्षितवन्तः—इति ।

तदनन्तरं हस्तियुद्धं समभवत् । महाराणाप्रतापस्य हस्तिसमक्षं अश्वाः गजाः नराश्च पलायन्त तदा मानसिंहस्य गजमुक्तानामा गजः आनीतः । सोऽपि पलायितुकामोऽभवत् । किन्तु तत्क्षणे एव प्रतापस्य गजवाहकः बाणेन हतः । पुनरपि हस्तियुद्धमभवत् । पुनरपि प्रतापस्य गजवाहकः शरेण हतः । प्रतापस्य रामप्रसादनामा हस्ती मानसिंहस्य सैनिकैः गृहीतः ।

तदा हस्ताहस्ति युद्धं अभवत् । मानसिंहः प्रतापश्च अपि परस्परं समीपे आगतौ । किन्तु तौ न कौ अपि प्रहारमकुरुताम् । तदा प्रतापेन भयंकरः त्रिशूलः प्रक्षिप्तः । तत्प्रहा-

रेण मानसिंहस्य गजवाहकः मृत्युं प्राप्तः । द्वयोः पक्षयोः योद्धारः प्रबलपराक्रमेण अयुध्यन्त । प्रतापोपरि शत्रूणां तुमुला शरवर्षाऽभवत् । स शरेण भल्लकेन च आहतः ।

इदम् युद्धमेकप्रहरपर्यंतमभवत् । रामदासराष्ट्रकूटः पितृवत् वीरगतिं प्राप्तवान् । रामशाहपुत्रत्रयसहितः समरशायी अभवत् । तदा मानसिंहस्य समग्रसैन्यशक्तिः प्रतापोपरि प्रहृता । सः शत्रुभिः परिवेष्टितः । हतप्रायोऽभवत् । तस्मिन्क्षणे वीदाझाला तस्य सहायतार्थं आगतः । प्रतापस्य छत्रं चामरञ्च गृहीत्वा अग्रे पुरः सरनघोषयत् "अहमस्मि प्रतापः जीवन् युध्यमानः घातयन् च । प्रतापः सेवकैः सुरक्षितस्थाने नीतः । सः रक्तापलावितः आहतश्चाऽऽसीत् । वीदाझालान्ते कीर्तिमलभत । एवं समाप्तिं गतं हल्दीघाटीयुद्धम् । विजेतारश्च जयवन्तश्च उग्रतापेन तप्ताः युद्धखेदेन श्रान्ताः आसन् । मानसिंहः प्रतापं न अन्वधावत् । स भयभीत आसीत् । प्रतापः गुप्तस्थानात् ममोपरि सहसा प्रहारं करिष्यति इति भीत्या न सः किञ्चिदपि अकरोत् । प्रतापः प्रत्यक्षं पराजितः किन्तु तस्य पराजयं जयं मत्वा कवयः गायन्ति । मानसिंहस्य विजयं पराजयं मत्वा भृशं निन्दन्ति । यतः प्रतापः स्वातंत्र्यप्रेरणयाऽयुध्यत मानसिंहश्च लोभवशात् ईर्ष्यावशात् वा क्रीतसेनापतिरूपेण युद्धमकरोत् ।



# प्रातःस्मरणीयः प्रतापः

प्राचार्यः श्रीविश्वनाथमिश्रः
श्रीशार्दूलसंस्कृतविद्यापीठः, बीकानेरः (राज०)

अस्त्यधिभारतं जननी शूरतायाः, प्रसविनी वीरतायाः, धात्री धीरतायाः, उपदेष्ट्री निर्भीकतायाः, संदेशवाहिनी तेजस्वितायाः राजस्थानाङ्गभूता मेवाड़भूमिः। स्मारं स्मारं यदीयं शौर्यं वेपन्ते शत्रवः, कम्पन्ते कुटिलाः, पलायन्ते पापाः, निलीयन्ते तस्कराः। यदीयाः शासकाः बहिः कठोरा अपि अन्तःसरलाः, अनुशासनप्रियाः, भौतिकसर्वसाधनसम्पन्ना अपि, भीषणतमकष्टसहनदीक्षामण्डिता आसन्। येषां धर्मे प्रगाढानुरागः, देशभक्तावनुपमा श्रद्धा, प्रजानामपूर्वोऽनुरागः, कर्त्तव्यपरायणता च प्रतिपदं संलक्ष्यन्ते।

परतन्त्रता मानवस्य कृतेऽभिशापरूपा। अस्याश्छायापि कलंकायमाना मानसिकदासतामुद्भावयति, जडतां जनयति, उदासीनतां प्रचालयति, देशभक्तिभावनामपाकरोति। अतो मातृभूमिभावनाभरितान्तःकरणाः राष्ट्रियपुरुषाः अपाकर्तुं परतन्त्रताम्, रक्षितुं स्वाधीनताम्, वर्द्धयितुं मातृभूमिगौरवम्, ख्यापयितुं देशस्य विशेषताम्, स्वकीयशिरांसि हस्ततलमारोप्य प्राणानविगणय्य, रणाङ्गणमवतीर्णाः, भीषणजन्यमारचय्य प्रतिपक्षिणो यमलोकातिथीन् चिकीर्षन्ति, सत्यवसरे कुर्वन्त्यपि तथा। संसारस्य विभिन्नदेशाः, स्वकीयस्वाधीनतायाः रक्षाविधित्सया, महान्तमादर्शं प्रादर्शयन् अप्रतिमं त्यागमचीकरन् अद्वितीयां दृढतां च प्रादुरभावयन्। एतादृशेषु देशेषु पुण्यभूमेः मेवाड़स्य नाम सर्वोपरि वर्तते। अत्रत्या नरा नार्यो राजानः सैनिकाः वीरा भटा योद्धारश्च यया कठिनसरण्या भीषणसंग्रामं कृत्वा प्राणान् हुत्वा मातृभूमेः स्वाधीनतां प्रातिष्ठिपन् तत्तु विश्वस्मिन् जगति अनुपममनुकरणीयमादर्शभूतञ्च सर्वेषां स्वाधीनतानुरागिणाम्।

सेयं मेवाड़स्य पुण्यतमा वीरभूमिः यत्र महामनसा, अदम्योत्साहेन, अप्रतिमपराक्रमेण प्रतापेन जन्म लेभे। आकृत्या सुन्दरः, भव्यव्यक्तित्वभावितः, विशालशिराः, उन्नतललाटः सुदीर्घनेत्रः, पीनवक्षाः प्रतापः शौर्यस्य वीरतायाश्च, प्रतिमूर्तिरद्भुतपराक्रमश्चासीत्। एतस्यापूर्वः स्वतन्त्रतासंघर्षः, अतुलनीयस्त्यागः अदम्योत्साहः, परमोच्चादर्शः, विशुद्धचरित्रञ्च चिरकालाय सम्पूर्णमानवजातेः कृते प्रेरणास्रोतांसि सन्ति।

सांगानृपस्य मृत्योरनन्तरं मेवाड़राज्ये विघटनं प्रारब्धमासीत्। हाड़ीराज्ञ्या स्वकीयभ्रातुः कथनमङ्गीकृत्य विक्रमादित्यनामानं स्वकीयं तनयं सिंहासनारूढमापादयितुं कृत मेलनं बाबरेण साकम्। हाड़ीराज्ञ्याः

भ्रात्रा सूरजमलेन हते महाराजे रतनसिंहे अयोग्यो विक्रमादित्यः सिंहासनमारुरोह। एतस्यायोग्यतया कतिपये तदीयाः प्रमुखाः सामन्ता इतस्ततो गताः। अपरे च बहादुरशाहेन सह सम्मिलिताः। तेन च दृष्टा मेवाड़स्यान्तरिक्यशान्तिरत एवाक्रान्तं तत्र। मारिताश्च मेवाड़सैनिकाः, त्रयोदशसहस्राणि नारीणां जौहरव्रतमङ्गीकृत्यात्मनः समर्पयाम्बभूवुरग्नये। एतदनन्तरं युद्धे चैकस्मिन् हते विक्रमादित्ये सिंहासनासीने च अनौरमे उदयसिंहेन चितौड़नगरं स्वायत्तीकृतम्। किन्तु मुगलविरोधिशक्तिसञ्चयं कर्तुं नापारयत्। संघर्षपरायणः उदयसिंहो दिवंगतः। विषमपरिस्थितौ प्रतापस्य राज्यारोहणम्।

भीषणोऽयं करालः कालः। अस्मिन् समये मेवाड़मुकुटधारणं कंटकाकीर्णसिंहासनाधिरोहणायमानमुद्वेजकं, सन्तापकं किं बहुना कृतान्तकल्पमेवासीत्।

प्रतापेनाङ्गीकृता दुर्दान्तापीयं स्थितिः। नावलोक्यते तदानीं मेवाडं परितोऽन्धकाराद्दते प्रकाशकिरणोऽपि कदाचित्। प्रतापस्य कृते नासीत् धनं, न वा शक्तिः, न सैन्यबलम्, न वा तदीयं किमपि स्रोतः। प्रतापपूर्वजानां कुम्भासांगाप्रभृतिनृपाणां नेतृत्वे मेवाड़गौरवरक्षका राजानोऽङ्गीचक्रुरधीनताम् अकबरस्य उदयसिंहकाल एव। ते चेदानीं विरोधिनो हन्तारश्च। तेभ्यश्चापि मेवाड़रक्षा करणीयासीत् प्रतापस्य। अत एव कुम्भलगढ़स्य स्वकीयराज्याभिषेकसमारोहे प्रतिज्ञातं प्रतापेन—प्रेयांसो वीराः ? अतीवकष्टस्य महत्या लज्जायाश्चायं विषयो यदस्मद्समक्षे अस्माकं जननी मातृभूमिः कदर्यैः पापैः शत्रुभिराक्रान्ता पददलिता वा भवेत्। अतो यावन्न क्रियते स्वाधीना मातृभूमिस्तावन्न धारयिष्यते राजकीयो वेशः, न वा करिष्यते समुपयोगः स्वर्णरजतादिपात्राणाम्। पर्यङ्कशयनं सर्वथा परित्यक्तम्।

एवं प्रतिज्ञाय समारब्धः स्वातन्त्र्यसंघर्षः प्रतापेन। समायाताः कठिनादपि कठिनाः, भीषणादपि भीषणाः प्रतिकूलाः परिस्थितयः। परं न विरतः प्रतापः स्वसंकल्पात्। सत्यं शौर्यं स्वातन्त्र्यञ्चात्मनो मौलिका गुणाः। एतेषां प्राप्तिरेव जीवनस्य चरमोद्देश्यमीश्वरप्राप्तिर्वेति मतं प्रतापस्य। व्यष्टिगतानिमान् समष्टिगतत्वमापादयितुं प्रतापेन महान् यत्नोऽक्रियत। स्थापितं तेन नवीनं विशिष्टञ्च कीर्तिमानं स्वतन्त्रताया वीरतायाश्च। मुष्टिपरिमितान् वीरान् सैनिकानादाय तात्कालिकसंसारस्य महता साम्राज्यवादिना शासकेन सह भीषणसंघर्षमारचय्य कन्दरिकन्दरासु, अरण्यानीषु च भ्रामं भ्रामं उग्रतपा योगीव प्रतापो नैकवारं बुभुक्षितः पिपासितः, आरण्यान् कन्दफलादीन् कथं कथमप्युपलभ्योपभुज्य च पञ्चविंशतिवर्षं यावद् स्वतन्त्रतादेव्याः समाराधनबद्धपरिकरः उग्रं तपश्चचार। स्यादेतत्। रञ्जितानि स्युरितिहासस्य पृष्ठानि प्रत्येकं देशस्य स्वाधीनतानुरागिणां शौर्यगाथया। तेषां साहसं, शौर्यं

पराक्रमं त्यागं च पर्यालोच्य सर्वेषां देशभक्तानां शिरांसि स्वयमेव स्युर्नाम नमितानि, परन्तु अल्पीयसि साधने पवित्रां संस्कृतिम्, आदर्शभूतां परम्पराम्, चारित्रिकप्राञ्जलतां पुरस्कृत्य प्रतापेन यद् यदाचरितं तत्तु सर्वोपरि वर्तते। अत एव महात्मना गान्धिमहोदयेनोक्तम्—प्रतापो महामानवः। तदीयत्यागबलिदानदेशभक्तिभावनाभिरोतप्रोतेन देशेन भवितव्यमिति।

प्रतापसदृशं नररत्नं विशिष्टविभूतिञ्चावाप्य भारतभूमिः गौरवान्वितास्ति। परमोज्ज्वलेन चरित्रेण, आदर्शेन जीवनेन, शत्रुमुखभञ्जनपरायणेन कर्मणा भारतभूमेः यशोवर्द्धकः प्रतापो भूयसे कालायानुकरणीयो नमस्करणीयः प्रातः स्मरणीयश्च स्थास्यतीति नात्र विमतिः सर्वेषां भारतीयभावनाभरितान्तःकरणानाम्।



# सम्पादकीयम्—

दीनानाथत्रिवेदी मधुपः
सम्पादकः

## पुरस्कृत-शिक्षकाणां सेवावधौ वृद्धिः सम्पत्स्यते

इह हि सितम्बरमासस्य ५ तारिकायां पुरस्कारविजेतॄणां शिक्षकाणां सम्मान-समारोहे **मुख्यमन्त्री श्रीहरिदेवजोशीमहाभागः** समघोषयद्यत्–प्राप्तपुरस्काराणां शिक्षकाणां सेवानिवृत्तेर्निर्धारितस्यावधेरनन्तरं वर्षत्रयात्मकस्य कालस्य वृद्धिर्विधास्यते—इति



किञ्च पुरस्कृतान् शिक्षकान् समुद्दिश्य श्रीमुख्यमन्त्रिणा प्रतिपादितं यत् शिक्षकैरेतदवश्यमनुभवितव्यं यत्ते शिक्षाविभागे केवलं सेवां कर्तुमेव नापि तु कानिचिदुद्देश्यानि समधिगन्तुं सन्ति समागताः—इति ।

अवसरे चास्मिन् **शिक्षामन्त्री श्रीमोहनछांगाणीमहानुभावः** समवोचद्यत् भारतीय–परम्परानुसारेण शिक्षकैर्न स्वार्थमपितु परार्थं जीवनं शिक्षितव्यम् । शिक्षापद्धतयस्तु समयानुसारं परिवृत्तिमवाप्स्यन्ति, परमेषा शाश्वतिकी वार्ता सर्वदा स्थास्यति । अतो यदि भवद्भिः शिक्षकवर्यैः परार्थं जीवनं शिक्षितं, तर्हि सर्वा अपि बाधाः परिसमाप्तिं यास्यन्तीति ।

## हा हन्त ! श्रीदुर्गादत्तशर्मा मैथिलः स्वर्गतः

सखेदमिदमावेद्यते यत् स्वर्गत–भूतपूर्व-व्याकरणविभागाध्यक्षस्य गुरुवर–श्रीचन्द्रदत्तशर्ममैथिल–महाभागस्य द्वितीयः सुयोग्यः पुत्रः **श्रीदुर्गादत्तशर्मा मैथिलो व्याकरणाचार्यो** भाद्रपदस्यास्य शुक्लाष्टम्यां सहसा स्वर्गतः । स हि प्रतिदिनं सपत्नीकः श्रीगोविन्दमन्दिरं प्रयाति स्म । अस्मिन् दिनेऽपि यथापूर्वं प्रातर्गोविन्दमन्दिरं गन्तुकामः पत्नीं प्रावदद्यत्—शीघ्रं मह्यं दुग्धं त्वया प्रदेयं, श्रीगोविन्ददर्शनवेला अतिक्रामति । ततश्च पत्न्या प्रत्तं दुग्धपात्रमादाय यावत् स दुग्धं पातुं प्रवृत्तस्तदा सहसैव किञ्चिद्दुग्धपानान्तरमेव तत्पात्रं हस्तादधः पतितं, ततः स स्वयञ्चापि सहसा भूतले छिन्नो वृक्ष इव निपतितः । क्षणानन्तरञ्च 'गोविन्द !' इति सम्बोध्य स हन्त विगतप्राणोऽजायत ।

यदा च दुःखप्रदोऽयं वृत्तान्तः प्रथमं यैरपि महानुभावैः श्रुतस्तदा सहसा तेषां कृते विश्वास एव नाजायत, यतो हि स शरीरेण दृढः पूर्णरूपेण चासीत् स्वस्थः ।

किञ्च जयपुरस्थ-महाराज-संस्कृत-कालेज एव स पितृवद् व्याकरणविभागस्य भू० पू० अध्यक्षोऽस्थात् । अपि च 'कारणगुणाः कार्यगुणानारभन्ते' इत्येष नैयायिकानां समुद्घोषो दिवंगतात्मनि तस्मिन् पूर्णरूपेण तथ्योऽसिध्यत् । अत एव वैयाकरणवरेण तेन व्याकरणाध्यापने च स्ववंशपरम्परा सम्यक् परिरक्षिता ।

ततश्चास्यैव मासस्य त्रयोदश्यां महाराज-संस्कृत-कालेजे **राजगुरु-श्रीविद्यानाथ-झामहाभागस्या**ध्यक्ष्ये शोकसभा चैका समायोजिताऽभूत् । तत्र विद्वांसः सतीर्थ्याः सहचराश्च सर्वेऽपि तदीयान् गुणान् वर्णयन्तो महान्तं शोकञ्चानुभवन्तः श्रद्धाञ्जलीः समर्पितवन्तः । तदा तत्र शोकाकुलेन मयापि दिवंगतात्मने तस्मै समर्प्यत—

## श्रद्धाञ्जलिः

सर्वतः प्रथमं श्रीमच्चन्द्रदत्ताभिधाय मे ।
मान्याय गुरुदेवाय हृदयेन पुनः पुनः ॥ १ ॥

भ्रात्रे च भवदत्ताय गुरुपुत्राय चाधुना ।
स्वर्गस्थिताय सद्भक्त्या प्रणामाञ्जलिरस्तु मे ॥ २ ॥

अस्मिन् भाद्रपदेऽभद्रे शुक्लाष्टम्यां बुधे दिने ।
[1]बच्चाजिः सहसा हन्त ! चान्द्रदत्तिर्दिवं गतः ॥ ३ ॥

गोगोपीव्रजवासिसर्वजनतादुःखौघविध्वंसकः,
भक्तानां परिपोषकश्च सुखदस्त्वं रक्षकः सन्नपि ।
हे गोविन्द ! दयानिधे सुचरितं भक्तं त्वदीयं पुनः,
दुर्गादत्तमितः कुतोपहृतवान्, न्याय्या न तीतिस्तव ॥ ४ ॥

दुर्गादत्त ! सखे ! गुरोस्तनय हे विद्वन् विपश्चित्प्रिय !
अस्मांस्त्वं सहसा विहाय सकलान् लोकान्तरं प्रस्थितः ।
तुभ्यं सम्प्रति शोकतप्तमनसा श्रद्धाञ्जलिर्दीयते,
दद्यात् स्वर्गगताय शान्तिमपि ते कृष्णश्च स प्रार्थ्यते ॥ ५ ॥

—मधुपः

१ इति नाम्नै सहचरेषु विख्यातोऽवर्तत स दिवंगतात्मा ।

# ८–मन्थरकाख्यकौलिककथा

श्रीपद्मशास्त्री, माण्डलगढ़ः (राज०)



कदाचित्कौलिकः कश्चित्
पटकाष्ठजिघृक्षया ।
वने कुठारमादाय
गृहात्तूर्णं विनिर्गतः ।। १ ।।

किसी समय कोई कौलिक खाट की लकड़ी लाने के लिए, शीघ्र ही कुल्हाड़ा लेकर वन की ओर निकल गया ।। १ ।।

तेन दृष्टो नदीतीरे
शिंशपापादपो महान् ।
अनेन कर्तितश्चायं
महावृक्षः कुठारतः ।। २ ।।

उसने देखा कि नदी के किनारे एक महान् शिंशपा का वृक्ष है, इसने इस महान् वृक्ष को कुठार से काट दिया ।। २ ।।

वृक्षं तु व्यन्तरः कश्चित्
चिरादासीत्समाश्रितः ।
उवाच पादपोऽयं भो
रक्षणीयो ममाश्रयः ।। ३ ।।

उस वृक्ष में चिरकाल से कोई व्यन्तर (देव) रहता था। इस पेड़ ने कहा—मेरे आश्रय की रक्षा करो ।। ३ ।।

व्यन्तरः प्राह तुष्टोऽहं
स्वाभीष्टं पूरयामि ते ।
यद्येवं तर्हि भो पूर्वं
भार्यां पृष्ट्वा गृहादहम् ।। ४ ।।

व्यन्तर ने कहा— मैं प्रसन्न हूँ तुम्हारी मनोकामना पूर्ण करूंगा। मन्थरक ने कहा यदि ऐसा है तो मैं पहले घर से भार्या को पूछ कर आता हूँ ।। ४ ।।

आगामिष्यामि भो देव !
मित्रं पृष्ट्वा च नापितम् ।
किं प्रार्थये कथय भो !
अहं त्वां प्रष्टुमागतः ।। ५ ।।

मैं अपने मित्र नापित को पूछ कर भी आता हूँ हे मित्र ! तुम्हीं बताओ कि मैं क्या मांगू यही पूछने आया हूँ ।। ५ ।।

यद्येवं तर्हि तद्राज्यं
भद्र ! प्रार्थय सत्वरम् ।
तदा स्वपत्नीं गत्वा सः
सर्वं वृत्तं न्यवेदयत् ॥ ६ ॥

यदि ऐसी बात है तो शीघ्र ही तुम राज्य मांगो। तदनन्तर अपनी पत्नी के पास जाकर उसने सारा वृत्तान्त कह सुनाया ॥ ६ ॥

याचस्व त्वं भुजद्वन्द्वयुगलं
मस्तकान्तरम् ।
पटद्वयं येन गृहे
सम्पद्येत समं तव ॥ ७ ॥

तुम व्यन्तर से ४ भजाएं दो मस्तक मांगों जिससे दो वस्त्र स्वयमेव हो जावें ॥ ७ ॥

तदाकर्ण्य प्रहृष्टः सन्
कौलिको निवृतः पुरात् ।
व्यन्तरं प्रार्थयाञ्चक्रे
देहि मह्यं मदीप्सितम् ॥ ८ ॥

यह सुनकर वह कौलिक प्रसन्न होता हुआ अपने घर से लौट गया, व्यन्तर से प्रार्थना करने लगा कि मुझे मेरा इच्छित वर दो ॥ ८ ॥

द्विशिराश्च चतुर्बाहु—
र्जातस्तस्य प्रसादतः ।
तावल्लोका राक्षसं तं
मत्वा हन्तुमुपागताः ॥ ६ ॥

व्यन्तर की कृपा से उसके २ सिर और ४ भुजाएं हो गईं परन्तु लोग उसे राक्षस समझ मारने को आये ॥ ६ ॥

मृतोऽयं ताडनात्तूर्णं
निपपात महीतले ।
इत्थं मन्थरकाख्येयं
प्रसिद्धा जगतीतले ॥१०॥

उनके द्वारा पीटने से यह पृथ्वी पर गिर गया और मर गया। इस प्रकार इस पृथ्वी पर, मन्थरक की यह कथा, प्रसिद्ध हुई ॥१०॥

यस्य नास्ति स्वयं प्रज्ञा
मित्रोक्तं न करोति यः ।
स एव निधनः शेते
यथा मन्थरकौलिकः ॥

जिसके पास स्वयं बुद्धि नहीं होती और जो मित्र की बात भी नहीं मानता है वह उसी प्रकार मृत्यु को प्राप्त होता है जिस प्रकार मन्थरक कौलिक ।

# भारती

R. J. No. 2617
Licence. No. PP. 9
'Licenced to Post.
Without prepayment'

## सूक्ति-सुधा

### [ पञ्चत्वसंख्योपदिष्टमुद्दिश्य ]

दीनानाथत्रिवेदी 'मधुप' सम्पादकः

**पञ्चापि परवस्तूनि सेव्यमानानि सर्वदा ।**
**लक्ष्मीहराणि चैतानि नृणां प्रोक्तानि सूरिभिः ॥**

अर्थात् नित्य सेवन की जाती हुई दूसरों की ये पाँच वस्तुएं विद्वानों के द्वारा मनुष्यों की लक्ष्मी का नाश करने वालो कही गई हैं ।

यथा—

**परान्नं परवस्त्रञ्च परशय्या परस्त्रियः ।**
**परवेश्मनि वासश्च शक्रस्यापि श्रियं हरेत् ॥**

जैसे—

दूसरे का अन्न, दूसरे का वस्त्र, दूसरे की शय्या, परस्त्री और दूसरे के घर में निवास—देवराज इन्द्र की भी लक्ष्मी का हरण करले ।



प्रकाशकः—जयबहादुरसिंह पता : भारती भवन, गोपालजी का रास्ता, जयपुर ३०२००३ । दूरभाषः ७५४९६
राधेश्याम द्वारा श्री शङ्कर आर्ट प्रिण्टर्स, त्रिपोलिया बाजार, जयपुर में मुद्रित दूरभाषः ६१७६७